न्तुनस्यादेव । कूचिमस्तुतुप्रकृतिस्थ ता । चरणेति वामस्तु दक्षिणग्र न्थिपश्चात्पार्श्वस्था । दक्षिणस्तु वामग्रन्थिपश्चात्पार्श्वस्थैव सदुपदे शात् । करस्यातुवच्यते ॥ * ॥ प रीक्षाप्रकारमाह । सव्येन रोग धृतिकूर्परभागभाजा पीड्याथ दक्षि णकराङ्गुलिकाचयेण । अङ्गुष्ठमूलम धि पश्चिमभागमध्ये नाडीं प्रभञ्ज नगतिं सततं परीक्षेत् ॥ सव्येन क रेण । रोगधृतिर्गदधारण मित्या पीडने हेतुः । रोगाणां वातादि पि त्तुनवायूनां धारणं यथा स्यात् तथा पीड्येति कश्चित् । भागइति समुदि तकफोणिपरम् भाजेति परीक्षा कालेपि तत्र हस्तस्थितये । आपी- ड्येत्यर्थान् नाडीम् एतच्चापीडनंवा तादि पौर्वापर्य्यायबोधनाय । अथे त्या पीडनानन्तरम् नतु परीक्षा- कालेप्यापीडनस्थितिः । दक्षिणेति प्रायिकम् स्वपरीक्षाया मन्यथात्वा त् । एवेति योग्यतया तर्जनीमध्य मानामिकाग्रहणम् । पश्चिमेत्य ङ्गुष्ठस्याधोभागः । मूलेति तदुक्तम् । अङ्गुष्ठस्यतु मूलेया धमनी जीवसा चिणी । तस्या गतिवशाद्विद्यात् सु खं दुःखञ्च देहिनाम् ॥ प्रभञ्जनग



तिर्य्यचेति नाड्यन्तरनिरासः । सतत मित सुस्थतादशायामपि । तदुक्त म् भाविरोगाभिबोधाय सुस्थनाडी परीक्षणमिति ॥ * ॥ परीक्षणीय माह । वातं पित्तं कफं द्वन्द्वं सन्निपा तं तथैवच । साध्या साध्यविवेकञ्च सर्वं नाडी प्रकाशयेत् ॥ सन्निपात मिति सामान्यतः । साध्यासाध्यमि ति विशेषतश्चेत्यर्थः । सर्वमित्येत दन्यज्वरोगादिक मित्युपसंहारः ॥ इति नाडीप्रकाशे प्रथमोद्योतः ॥ * ॥ अथ नाडीज्ञानसमय माह । प्रातः कृतसमाचारः कृताचारपरिग्रहम् । सुखासीनः सुखासीनं परीक्षार्थं मुपाचरेत् ॥ प्रातरिति प्रायिकम् म ध्याह्ने उष्णता इत्युक्तेः ॥ * ॥ नि षिद्धकालमाह । सद्यः स्नातस्य भुक्त स्य चुत्तृष्णातपसेविनः । व्याया माक्रान्तदेहस्य सम्यङ् नाडीन वुध्य ते ॥ तैलाभ्यङ्गेच सुप्तेचतथाचभो जनान्तरे । तथा न ज्ञायते नाडी य था दुर्गतरा नदी ॥ सुप्ते निद्राकाले । भोजनान्तरे भोजनमध्ये भोजना वसानमात्रेच । वातमूर्च्छादिक्षणि करोगे नायंविधिः ॥ * ॥ अथ वाता दिस्वभावक्रममाह । आदौच वहते वातो मध्येपित्तं तथैवच । अन्तेच

वहते श्लेष्मा नाडिकाचयलक्षणम् ॥ आद्याविति। कफोणिपीडितद्वितीयक्षणे। ननु तर्जनीनिवेशस्थलेस्थानभेदस्य कुत्राप्यवक्ष्यमाणत्वात् ॥ * ॥ सुस्थताज्ञानार्थमाह। भूलतागमनप्राया स्वच्छा स्वास्थ्यमयी शिरा। ।प्रायेति बाहुल्येन। स्वच्छा परितो जाड्यरहिता। स्वास्थ्यमयी सुस्थताव्यञ्जिका च। तथा। प्रातःस्निग्धमयी नाडी मध्याह्ने चोष्णतान्विता। सायाह्ने धावमाना च चिराद्रोगविवर्जिता ॥ चिरादिति। अतीतानागतयोर्द्वयोरप्युक्तिः पथ्याश्रितानामेव ॥ * ॥ वातादीनां क्रमेण गतिमाह। वाताद् वक्रगता नाडी चपला पित्तवाहिनी। स्थिरा श्लेष्मवती ज्ञेया मिश्रिते मिश्रिता भवेत् ॥ वक्रेति। वायोस्तिर्यग्गमनात् तिरोवहन्तीति। एवं तत्प्रकोपादिना वार्त्तादिगतिरपि ज्ञातव्या। चपलेति। वह्नेरूर्द्ध्वज्वलनादूर्द्ध्वचञ्चला। स्थिरेति जलस्यनीचगमनादनुल्बणा। मिश्रिते मिश्रितचिह्ना भवति। तेन द्विदोषजे उभयचिह्ना। सर्वजे सर्वचिह्नेति। चपलतास्थिरतयोः समयभेदेनाविरोधः ॥ * ॥ उक्तवक्रादिसामान्यस्य विशेषमाह। सर्पजलौकादिगतिं व



दन्ति विबुधाः प्रभञ्जनेन नाडीम्। पित्ते च काकलावकभेकादिगतिं विदुः सुधियः ॥ राजहंसमयूराणां पारावतकपोतयोः। कुक्कुटादिगतिं धत्ते धमनी कफसंवृता ॥ आदिना वाते वृश्चिकगति र्दीलायिता। आदिशब्देन पित्ते कलिङ्कलविङ्कादिगतिः। कफे गजवराङ्गनादिगतिः ॥ * ॥ द्वन्द्वजस्यापि क्रमेणैव भेदानाह। मुहुः सर्पगतिं नाडीं मुहुर्भेकगतिं तथा। वातपित्तद्वयोद्भूतां प्रवदन्ति विचक्षणाः ॥ भुजगादिगतिञ्चैव राजहंसगतिं धराम्। वातश्लेष्मसमुद्भूतां भाषन्ते तद्विदो जनाः ॥ मण्डूकादिगतिं नाडीं मयूरादिगतिं तथा। पित्तश्लेष्मसमुद्भूतां प्रवदन्ति महाधियः ॥ * ॥ त्रिदोषजामप्याह। उरगादिलावकादिहंसादीनाञ्च बिभ्रती गमनम्। वातादीनाञ्च समं धमनी सन्न्यन्ध माधत्ते ॥ सममिति-न्यूनाधिकता निरासः। क्रमगत्यात्तु नासाध्यत्वम्। तथा। वातलित्तिरिवार्त्ताक्रमगमनं सन्निपाततः। कदाचिन्मन्दगा नाडी कदाचित् शीघ्रगा भवेत् ॥ त्रिदोषप्रभवे रोगे विज्ञेया हि भिषग्वरैः। पित्तक्रमतया कृच्छ्रसाध्यत्व मसाध्यत्वञ्च ॥ * ॥ सा

मान्वतः सुखसाध्यत्व माह । यदा यं धातु मामोति तदा नाडी तथा गतिः। तथाहि सुखसाध्यत्वं नाडी ज्ञानेन बुध्यते ॥ अयमर्थः । अपरा ह्लादै नाडी वातोल्वणा प्रथमं वा तगत्यैव वहति ततो यथायथंपि त्तादिगत्या नतु पित्तोल्वणात्वे वा तादिगत्या तदासुखसाध्यत्वं व्यति रेकेण व्यतिरेकः । तदुक्तमन्यैः । नाडी यथाकालगति सुयाणां प्रकोपशा न्त्यादिभिरेव भूयः ॥ * ॥ अथासाध्य रूपमाह । मन्दं मन्दं शिथिलशिथिलं व्याकुलं व्याकुलंवाहित्वा हित्वा वह तिधमनीयाति नाशमस्या सूक्ष्मा। नित्यं स्थानात् स्खलति पुनरप्यङ्गुलिं सं स्पृशेदाभावैरेवंबहुविधविधैः सन्निपातादसाध्या॥ मन्दं मन्दं मुहुरनुद्भटमप्रखरमिति यावत् । शिथिले गति स्खलदितिरूपम् । व्याकुलेतिच त्वरितत्वलः। वाशब्दः समुच्चये । स्थित्वास्थित्वे त्यावृत्याचतद्रूपैवग तिः। नाशमदर्शनम् । गच्छतिकदाचिन्नाडीस्पन्दोपिनसम्भाव्यत इत्यर्थः। सूक्ष्मेति यदि लभ्यते तदातथैवानित्यं प्रायःस्थानमङ्गुष्ठमूलंतस्मात् स्खलति कदापि तत्र न स्पन्दतइत्यर्थः। तदुक्तम् । इन्तिचस्थानवि



च्युतेति किञ्चित्स्फुरतीति कुत्रापि । पुनरपीति कियत्कालेन अङ्गुली मङ्गुलीमूलमेवमित्येवंरूपै र्बहुभिर्भावै र्धर्मैः। उक्तञ्चान्यत्र । सन्तापेपिशीतत्वं शीतत्वे तापिताशिरा । नानाविधगतिर्यस्यास्तस्य मृत्युर्नसंशयः ॥ सन्तेत्याशयाकृष्टपित्तादिकृततापनिरासः । शीतत्वद्वयचापि सन्हेति सम्बध्यते । तथा । त्रिदोषे स्पन्दते नाडीमृत्युकालेपि निश्चला । निश्चला स्पन्दसामान्याभावती । अतीसारादौ हस्तपादादि स्वेदादिना स्पन्दोपलम्भात् ॥ तथा । पूर्वं पित्तगतिं प्रभञ्जनगतिं श्लेष्मा सम्बिभ्रतीं स्वस्थानभ्रमणं मुहुर्विदधतीं चक्राधिरूढामिव । तीव्रत्वं दधतीं कलापिगतिकां सूक्ष्मत्वमातन्वतीं नो साध्यां धमनीं वदन्ति सुधियो नाडीगतिज्ञानिनः ॥ अयमर्थः । पूर्वमितिक्रमविपर्यये पित्तादिगतिमतीं वारंवारमेवंक्रमेण चक्रोपरिभ्राम्यमाणामिव । तथातीव्रत्व मतिशयवेगम् एवञ्चकदाचिन्मयूरवद्गमनाम् । तयोत्तरोत्तरं कृशता मापादयन्तीति विशिष्टो हेतुः । तथाचान्यत्र । यात्युच्चाच स्थिरा त्यन्तायाचेयं मांसवाहिनी । याच

सूक्ष्माच वक्राच तामसाध्यां वि
दुर्बुधाः ॥ अत्युच्चा सहजतोप्युच्च
तरा पृथगिवोन्नतावा। कदाचिद्दिति
स्थिरा प्रणिधानेनैव गम्यमानस्पन्दा
च। मांसवाहिनी मांसाहारइव ग
तिमतो लगुडप्रायेति। तदुक्तम्।
मांसेन लगुडाकृतिः। मांसेनसमं
वहतीति नयुक्तं तद्रूपपरिज्ञापकप्र
कारस्यानुक्तत्वात्। इयमपिविशिष्ट
बोधनाय। याचसूक्ष्माचवक्राचेति
पृथगिववाक्यान्तरमिति ॥ * ॥ असा
ध्यत्वापवादमाह। भारप्रवाहमूर्च्छा
भयशोकप्रमुखकारणान्नाडी। सम्मू
र्च्छितापिगाढं पुनरपिसाजीवितं ध
त्ते ॥ चिरतरबहुलभारोद्वहनेनवा
विषवेगधारावाहिरुधिरदर्शनादिज
नितमूर्च्छयावा राक्षसादिसन्दर्शना
दिभयेनवा पुत्रादिविरहजनितशो-
कातिरेकेणवा सम्मूर्च्छितापि अति
निस्पन्दापि। गाढमिति सुतरां का
र्श्यादियोगेपीत्यर्थः। पुनरितिसा
ध्यतां यातीत्यर्थः। भावानां रत्या
दीनां प्रवाहइति न युक्तम् भयशो
कयोः पृथग्विधानात्। प्रमुखेत्यने
न हेत्वन्तराभिधानम्। तदुक्तम्।
पतितः सन्धितो भेदी नष्टशुक्रश्च
योनरः। शाम्यते विस्मय स्तस्य न कि
ञ्चिन्मृत्युकारणम् ॥ पतित उच्चादि
तः सन्धितोऽस्थ्यादिसन्धानेन संहि
तः। भेदी अतीसारवान्। नष्टशु
क्रो यक्ष्मादिनातिरमणेनवा शुक्रक्ष
यवान्। विस्मयोऽसाध्यत्वानुमानं
शाम्यति नावतरति। कारणं प्रागुक्त
मत्तदेव। अन्यत्रापि। तथाभूताभि
षङ्गेपित्रिदोषवदुपस्थिता। सत्वाङ्गा
वहते नाडी तथाच न क्रमंगता ॥
अपमृत्युर्नरोगाङ्गा नाडी ततसन्नि
पातवत्। भूताभिषङ्गे तथा भूतसामा
न्याभिषङ्गेच देवजुष्टादौ नाडी स
न्निपातधर्मशालिनी उपस्थिता। स
पाततएव भवति नतु तत् फलप्रदा।
भेदमाह। समेति। वातपित्तकफ
स्वभावक्रमवती तथाक्रमं व्यतिक्रम्य
नगता। तस्मादेव अपमृत्युः अपग
तो मृत्यु र्यस्याः सा तथा। परमा
र्थतःसन्निपातवदपि सन्निपातजन्या
न स्यादिति। तदुक्तम्। स्वस्थानहीं
ने शोकेच हिमाक्रान्तेच निर्गदाः।
भवन्ति निस्पृहा नाड्यो न किञ्चित्
तत्र दूषणमिति ॥ स्वस्थानहीन
उच्चादितः पतने। अङ्गुष्ठमूलत च
रण इति तत्त्वार्थः। निर्गदा इत्य
सङ्गतिः निर्गदा अपिनिस्पृहा भव
न्ति। दूषणमसाध्यत्वलक्षणः। अन्ये

त्वाहुः। स्तोकं वातकफं जुष्टं पित्तं वहति दारुणम्। पित्तस्थानं विजानीयात् भेषजं तस्य कारयेदिति॥ अयमर्थः। वातकफाभ्यां नाडी किञ्चिद्वहति दुष्टं क्षीणत्वाधिकत्वाभ्यामपि विशेषा दुल्वणं पित्तं विषमवेगेन वहति तदातत् प्रतीकारार्थं भेषजं कुर्यात्। असाध्यतान स्यादिति यावत्। अत्रकश्चित्। स्वस्थानच्यवनं यावद्धमन्या नोपजायते। तावच्चिकित्सासत्त्वेपिनासाध्यत्वमितिस्थितिरिति॥ तच्चप्रायिकं बहुधाव्यभिचारदर्शनात्। हन्ति स्वस्थानविच्युतेत्यत्र चकारस्यायोगव्यवच्छेदकत्व मित्यर्थः॥ *॥ प्रसङ्गात् कालनिर्णयमाह। भूलता भुजगाकारा नाडीदेहस्य सङ्क्रमात्। विशीर्णा क्षीणतां याति मासान्ते मरणं भवेत्॥ कदाचित् मही लतावत् कृशा तन्नतिमन्दतिमन्दगमनाच। कदाचित् सर्पवत् परिपुष्टा तन्नतिवद्वलवत्तरवक्रगमनाचेति वैशिष्ट्येन सुस्थदशातो भेदः। इत्थञ्च कदाचिद्दलच्युता मति कृशताञ्च यदागच्छति। देहेति देहक्रम मपेक्ष्य तेन देहोपि यदा स्थूलः शोथादिना कदाचिच्च कृशःस्या

त् तदाद्वितीयेमासिम्रियत इति। तथा। क्षणाद् गच्छति वेगेन शान्ततांलभते क्षणात्। सप्ताहान् मरणं तस्य यद्यङ्गेशोथवर्जितः॥ क्षणादिति द्रुतं नतु कदाचिदिति। शान्ततामनुपलभ्यमानत्वम्। शोथेति तन्मात्रसम्बन्धे तुना चिरं मरणाय चिरमेवेत्यर्थः। तथा। हिमवद् विशदा नाडी ज्वरदाहेनतापिनाम्। त्रिदोषस्पर्शभजतां तदा मृत्युर्विनिश्चयात्॥ यदानिरन्तरं ज्वरदाहतापौ शैत्यञ्च नाड्याः। त्रिदोषेति सन्निपातलक्षणसत्त्व एव भवति। तदा। निरीक्ष्यादक्षिणे पादे तदा चैवाविशेषतः। मुखे नाडी वहेन्नित्यं ततस्तु दिनतुर्यकम्॥ गतिन्तुभ्रमरस्येव वहेदेकदिनेनतु। कन्देनस्पन्दते नित्यं पुनर्लगति चाङ्गुलौ॥ मध्ये द्वादशयामानां मृत्युर्भवति निश्चितम्॥ दक्षिण इति पुंसः। स्त्रियास्तु वाम एव। तथेति करस्येव विशेषतो विशेषज्ञानार्थम्। यदिचोभयनाड्यपि मुखेपुरोभागे नित्यं सदा वहति तदा दिनचतुष्टयं प्राप्य भ्रमरस्य परिभ्रमणरूप गमन मिव मुखएव यदिवहति तदैकदिनेन। कन्दे मूलेस्पन्दनस्या[illegible] कदाचिन्

न स्पन्दते स्वल्पं स्पन्दत इति सम्भाव्यते। निश्चयं प्रायः पुनस्तावत्तौ तन्मूले कदापि लगति तदा तस्मादारभ्य द्वादशप्रहरमध्यएव मृत्युरिति। तथा। स्थित्वा नाडी मुखे यस्य विद्युद्द्योति रिवेक्ष्यते। दिनैकं जीवितं तस्य द्वितीये म्रियते ध्रुवम्॥ स्थित्वेत्यात्यात्त्या स्थित्वा स्थित्वा विद्युत् स्फुरणमिवलक्ष्यते द्वितीय इत्यष्टप्रहरादूर्द्ध मित्यर्थः। तथा। स्वस्थानविच्युता नाडी यदा वहति वा नवा। ज्वालाच हृदये तीव्रा तदा ज्वालावधिस्थितिः॥ न वेति स्थित्वा स्थित्वे त्यर्थः। इत्यन्यदसाध्यलक्षण मुक्त मवस्थाना द्रपवादविरहेसति तस्यार्थप्रवेशो यथा यथ मार्यमतिभिरवगन्तव्य इतिनेह प्रतन्यते ग्रन्थगौरवभयात्। मन्दं मन्दमिति अनेनच भूलतागमनाकारेति विरुध्यते तस्य तावत्कालिकमरणविषयत्वात्। सर्व मिदं सर्व रोग एव वेदितव्यं ज्वरमात्रेतु भ्रम एवेति॥ * ॥ इतिनाडीप्रकाशे द्वितीयोद्योतः॥ * ॥ अथरोगेषु निरूपणीयेषु प्रधानतया प्रथमं ज्वरनिरूपण माह। तत्र ज्वरपूर्वरूपे। अङ्गग्रहेण नाडीनां भवन्ति मन्थराः

श्वाः। अवः प्रवलतांयाति ज्वरदाहोभिभूतये॥ सान्निपातिकरूपेण भवन्ति सर्ववेदनाः॥ * ॥ ज्वररूपमाह। ज्वरकोपेच धमनी सोष्णा वेगवती भवेत्। उष्मा जिम्हादृते नास्ति ज्वरो नास्त्युष्मणा विना॥ उष्णा वेगधरा नाडी ज्वरकोपे प्रजायते॥ अन्यच्च। ज्वरेच वक्राधावन्ती तथाच मरुतः स्रवे। रमणान्ते निशिप्रातस्तथा दीपशिखा यथा॥ * ॥ तत्रापि विशेषमाह। सौम्यासुक्ष्मास्थिरामन्दा नाडी सहजवातजा। स्थूलाच कठिनाशीघ्रा स्पन्दते तीव्रमारुते॥ द्रुताच सरला शीघ्रा दीर्घा पित्तज्वरे भवेत्। शीघ्र माहिनर्तना ड्याः काठिन्याच्च चलातथा॥ मत्ताजीर्णे नातितरां स्पन्दनञ्च प्रकीर्त्तितम्। नाडीतन्तुसमामन्दा शीतला श्लेष्मदोषजा॥ * ॥ द्वन्द्वजमाह। चञ्चला तरला स्थूला कठिना वातपित्तजा। ईषच्च दृश्यते तृष्णामन्दा स्याच्छ्लेष्मवातजा॥ निरन्तरं खरं रूक्षं मन्दश्लेष्मातिवातलम्। रूक्ष वातभवे तस्य नाडी स्यात् पित्तसन्निभा॥ रूक्षा शीता स्थिरा नाडी पित्तश्लेष्मसमुद्भवा॥ प्रसङ्गादाह। मध्येकरेवहेन्नाडी यदि सैन्निपित

ध्रुवम् । तदानूनं मनुष्यस्य रुधिरा
पूरिता मला: ॥ * ॥ आगन्तुकरूप
भेदमाह । भूतज्वरे भेकवदतिवेगा
धावन्ति नाड्योहि यथाब्धिगामा: ।
तथा । एकाहिकेन क्वचन प्रदूरे च
शान्तगामा विषमज्वरेण । द्वितीय
के वापितृतीयतुर्ये गच्छन्तितप्ता भ्र
मिवत् क्रमेण ॥ * ॥ अन्यचापि ।
उष्णा वेगधरा नाडी ज्वरकोपे प्रजा
यते । उद्वेगक्रोधकामेषु भयचिन्ता
श्रमेषु च ॥ भवेत् क्षीणगति नाडी
ज्ञातव्या वैद्यसत्तमै: ॥ प्रसङ्गादाह
। व्यायामे भ्रमणे चैवचिन्तायां श्रम
शोकत: । नानाप्रभावगमना शिरा
गच्छति विज्वरे ॥ * ॥ अजीर्णरूप
माह । अजीर्णेतु भवेन् नाडी कठिना
परितोजडा । प्रसन्नाचद्रुता शुद्धा त्वरि
ताचप्रवर्त्तते ॥ * ॥ तत्रविशेषमाह
। पक्वाजीर्णे पुष्टिहीना मन्दं मन्दं
वहेज्जडा । असृक्पूर्णाभवेत् को
ष्णागुर्वीसामा गरीयसी ॥ * ॥ प्र-
सङ्गाद् भक्षणज्ञानमाह । पुष्टिस्तैल
गुडाहारे मांसे चलगुडाकृति: । क्षी
रेचस्तिमितावेगा मधुरे भेकवद्ग
ति: ॥ रम्भागुडवटाहारे रूक्षशुष्का
दिभोजने । वातपित्तार्त्तिरूपेण ना
डी वहति निष्क्रमम् ॥ * ॥ अथरस

नाडी

ज्ञानम् । मधुरे वर्हिगमनातिक्तेस्था
द्भूलता गति: । अम्ले कोष्णा प्लवग
ति: कटुके भृङ्गसन्निभा ॥ कषाये
कठिनाम्लावालवणे सरला द्रुता । ए
वं द्वित्रिचतुर्योगे नाना धर्मवतीध
रा ॥ तथा । द्रवेऽतिकठिना नाडी
कोमला कठिनाशने । द्रवद्रव्यस्यका
ठिन्येकोमला कठिनापिच ॥ क्षौद्रे
पृथग् ग्रन्थिलेवपिष्टे पुष्टेव जायते ॥
* ॥ अग्निमान्द्यधातुक्षयलक्षणमा
ह । मन्दाग्ने: क्षीणधातोश्च नाडी
मन्दतरा भवेत् । तदुक्तम् । क्षीण
धातौच मन्दाग्नौ नाडी क्षीणतमा
ध्रुवम् । तथा । मन्देऽग्नौ क्षीणतां
याति नाडी हंसाकृतिस्तथेति । अ
न्येतु । आमाश्रमे पुष्टिविवर्द्धनेन भ
वन्ति नाड्योऽग्रभुजाभिवृत्ता: । आ
हारमान्द्या दुपवासतो वा तथैव ना
ड्यो भुजगाग्रमाना: ॥ * ॥ प्रसङ्गाद्
दीप्ताग्निज्ञानमाह । लघ्वी भवति
दीप्ताग्ने स्तथा वेगवती मता ॥ * ॥
प्रसङ्गाद् ग्रहणी मप्याह । पादेच
हंसगमना करे मण्डूकसंश्रवा । त
स्याग्ने मन्दता देहे त्वथवा ग्रहणी
गदे ॥ तथा । भेदेन शान्ता ग्रहणी
गदेननिर्वीर्यरूपा त्वतिसारभेदे ।
विलम्बिकायां प्लवगा कदाचि दामा

तिसारेपृथुता जडाच ॥ * ॥ अथ विषूचिकाज्ञानम्। निरोधे मूत्रश कृतोर्विड्ग्रहे स्थितराश्रिताः । विषूचिकाभिभूतेच भवन्ति भेकवत् क्रमाः ॥ * ॥ प्रसङ्गा दानाहमूत्रकृच्छ्रज्ञान माह । आनाहे मूत्रकृच्छ्रे च भवेन्नाडी गरिष्ठता ॥ * ॥ शूलज्ञान माह । वातेन शूलेन मरुत् प्रवेन सदैववक्रा हि शिरावहन्ती । ज्वालामयी पित्तविचेष्टितेन साध्यान शूलेनच पुष्टरूपा ॥ * ॥ अथप्रमेहज्ञानम् ॥ प्रमेहे ग्रन्थिरूपासासुतप्ता त्वामदूषणे ॥ * ॥ विषविष्टम्भगुल्मज्ञानमाह । उत्पित्तुरूपा विषरिष्टिकायांविष्टम्भगुल्मेन च वक्ररूपा । अत्यर्थवातेन अधः-स्फुरन्ती उत्तानभेदिन्यसमाप्तकाले ॥ * ॥ गुल्मे विशेष माह कश्चित् । गुल्मेन कम्पाऽथ पराक्रमेण पारावतस्येव गतिङ् करोति ॥ * ॥ अथ भगन्दरज्ञानम् । व्रणार्थं कठिने देहे प्रयाति पैत्तिकं क्रमम्। भगन्दरानुरूपेण नाडीव्रणनिवेदने ॥ प्रयाति वातिकं रूपं नाडी पावकरूपिणी ॥ * ॥ अथ वान्तादिज्ञानम् । वान्तस्य शल्याभिहतस्य जन्तोर्वेगावरोधाकुलितस्य भूयः । गतिं



विधत्ते धमनी गजेन्द्रमरालमानेव कफोल्वणेन ॥ * ॥ स्त्रीरोगादिक मपि रक्तादिज्ञानक्रमेण ज्ञातव्यम् ॥ क्वचित् प्रकरणोल्लेखात् क्वचिदौचित्यमात्रतः । क्वचिद् देशात् क्वचित् कालात् सङ्कीर्णगदनिर्णयः ॥ नाडीपरिचयज्ञानं प्रायशो नैव दृश्यते । तेन धाष्टर्यान् मयोक्तं यत् तत् समाधेय मुत्तमैः ॥ * ॥ इतिशङ्करसेनकविराजकृतौ नाडीप्रकाशे तृतीयोद्योतः ॥ * ॥ * ॥ * ॥

अथ भावमिश्रोक्ता नाडी परीक्षा । पुंसो दक्षिणहस्तस्य स्त्रियो वामकरस्यतु । अङ्गुष्ठमूलगां नाडीं परीक्षेत भिषग्वरः ॥ अङ्गुलीभिस्तुतिसृभि र्नाडी मवहितः स्पृशेत् । तच्चेष्टया सुखं दुःखं जानीयात् कुशलोऽखिलम् ॥ सद्यः स्नातस्य सुप्तस्य क्षुत्तृष्णातपशीलिनः । व्यायामश्रान्तदेहस्य सम्यङ् नाडी न वुध्यते ॥ वातेऽधिके भवेन् नाडी प्रव्यक्ता तर्जनी तले । पित्ते व्यक्ता मध्यमायां तृतीयाङ्गुलिगा कफे ॥ तर्ज्जनी मध्यमामध्ये वातपित्तेऽधिके स्फुटा । अनामिकायां तर्ज्जन्यां व्यक्ता वातकफे भवेत् ॥ मध्यमानामिका मध्ये स्फुटा पित्तकफेऽधिके । अङ्गुलि

चितयेपि स्यात् प्रव्यक्ता सन्निपाति
नः ॥ वाताद्वक्रगति नाडी पित्ता
दुत्प्लुत्यगामिनी । कफान् मन्दग
तिर्ज्ञेया सन्निपाताद्दतिद्रुता ॥ वक्र
मुत्प्लुत्य चलति धमनी वातपित्त
तः । वहेद्वक्रञ्च मन्दञ्च वातश्लेष्मा
धिकेऽस्वतः ॥ उत्प्लुत्य मन्दं चलति
नाडी पित्तकफेऽधिके । कामात्
क्रोधाद्वेगवहा चीणा चिन्ताभयप्लु
ता ॥ स्थित्वास्थित्वाचलेद्या सा ह
न्ति स्थानच्युता तथा । अतिचीणा
च शीताच प्राणान् हन्ति न संशयः ॥
ज्वरकोपेन धमनी सोष्णा वेगवती
भवेत् । मन्दाग्नेः चीणधातो श्च सै
व मन्दतरा मता ॥ चपला चुधित
स्य स्यात् तृप्तस्य भवति स्थिरा । सु
खिनोऽपिस्थिरा ज्ञेया तथा बलवती
मता ॥ इति ॥ * ॥ * ॥ * ॥ प्रस
ङ्गाद्योगिनामुपकाराय इडादिना
डीनां निरूपणम् । दक्षिणांशः स्मृतः
सूर्यो वामभागो निशाकरः । नाडी
र्दश विदुस्तासु मुख्यास्तिस्रः प्रकी
र्त्तिताः ॥ इडा वामेतनोर्मध्ये सुषु
म्णा पिङ्गला परे । मध्या तास्वपि
नाडी स्यादग्नीषोमस्वरूपिणी ॥
अथेडा वाममुष्काधः स्याधनुर्वक्रा वा
मनासापर्य्यन्तंगता । एवं पिङ्गला द



क्षिणाण्डाधः स्या धनुर्वक्रा दक्षिण
नासान्तंगता । पृष्ठवंशान्तर्गता सुषु
म्णे त्यर्थः । इतिसारदातिलकम् ॥
* ॥ नाडीनां संवहोदेवि कन्दयो-
निः खगाण्डवत् । तत्र नाड्यः सम्
त्पन्नाः सहस्राणां द्विसप्ततिः ॥ कन्द
स्य पद्मस्य योनि रुत्पत्ति स्थानं शा
लूकमितियावत् ॥ प्रधानाः प्राणवा
हिन्यो भूयस्तत्र दश स्मृताः । इडा
च पिङ्गला चैव सुषुम्णा च तृतीयि
का ॥ गान्धारी हस्तिजिह्वाच पूषा
चैवयशस्विनी । अलम्बुषाकुहूश्चैव
शङ्खिनीच दशस्मृताः ॥ एवं नाडी
मयं चक्रं विज्ञेयं शक्तिचक्रके । इडा
याः पिङ्गलायाश्च मध्ये यासा सुषुम्
णिका ॥ इयञ्च त्रिगुणा ज्ञेया ब्रह्मवि
ष्णुशिवात्मिका । रजोगुणाच वज्रा
ख्या चित्रिणी सत्त्वसंयुता ॥ तमोगुणा
ब्रह्मनाडी कार्यभेदक्रमेणचेति नि
रुत्तरतन्त्रे प्रथमः पटलः ॥ * ॥ इ
डापिङ्गलयोः स्वरूपंयथा । इडाच
शङ्खचन्द्राभा तस्या वामे व्यवस्थि
ता । पिङ्गला सितरक्ताभा दक्षिणं
पार्श्वमाश्रितेति योगार्णवः ॥ इडा
यां संश्रितश्चन्द्रः पिङ्गलायां दिवाक
र इति तन्त्रान्तरम् ॥ गुञ्जस्य काण्डे
। नाले ॥ ग्रन्थान्तरे ॥ गण्डदूर्वायाम् ॥

॥ कुट्टनचर्यायाम् ॥ षट्‌चणकाले। घटिकायाम् । षष्टिपलात्मककाले ॥ तृणान्तरे ॥ वेष्टितसूत्रस्याधारभेदे ॥ नालयति नलत्यनेनवा। नलगन्धे। पचाद्यच्। हलश्चेति घञ्वा। डलयोरेकत्वम्। गौरादित्वात् ङीष् ॥ यद्वा। नाडयति नाड्यते वा। नडभ्रंशे। चुरादिः। अचइः। ङीष् ॥

नाडीकः। पुं। पट्टशाके। पटुआ इति भाषा ॥ नाडीकोरक्तपित्तघ्नो विष्टम्भी वातकोपन इतिभावप्रकाशः॥

नाडीकलापकः। पुं। सर्पाक्ष्याम् ॥

नाडीकेलः। पुं। नारिकेले ॥ इतिशब्दरत्नावली ॥

नाडीचः। पुं। शाकविशेषे। केचुके। बिम्बरोचने ॥ नाडीचशाकं द्विविधं तिक्तं मधुरमेवच। रक्तपित्तहरंतिक्तं कृमिकुष्ठविनाशनम् ॥ मधुरंपिच्छिलंशीतंविष्टम्भिकफवातकृत् ॥ इतिराजवल्लभः ॥

नाडीचक्रम्। न। नाभिमण्डलस्थेचक्रविशेषे ॥ नाभिमण्डलमासाद्यकुकुटाण्डमिवस्थितम्। नाडीचक्रमितिप्राहु स्तस्मान्नाड्यः समुद्गताः ॥

नाडीचरणः। पुं। खगे। पक्षिणि ॥

नाडीजङ्घः। पुं। काके ॥ब्रह्मणोदयितेवकविशेषे ॥ मुनिविशेषे ॥

नाडीतरङ्गः। पुं। काकोले ॥ हिण्डके ॥ रतहिण्डके ॥ इतिमेदिनी ॥

नाडीतिक्तः। पुं। नेपालनिम्बे ॥

नाडीदेहः। पुं। भृङ्गिनाम्नि शिवस्य द्वारपाले ॥

नाडीनक्षत्रम्। न। जन्मनक्षत्रे ॥

नाडीविग्रहः। पुं। भृङ्गिणि। शिवद्वारपालविशेषे ॥

नाडीव्रणः। पुं। सदामलद्‌व्रणे। नाडीव्रणइति नासूर इतिचभाषा ॥ नाड्यांव्रणः ॥ विडङ्गत्रिफलाकृष्णाचूर्णंलीढंसमांशिकम्। हन्तिकुष्ठंकृमीन्मेहनाडीव्रणभगन्दरान् ॥ इतिगरुडपुराणम् ॥

नाडीशाकः। पुं। नाडीके ॥

नाडीस्वेदः। पुं। भृङ्गिणि। शिवद्वास्थे ॥

नाडीहिङ्गु। न। हिङ्गुप्रभेदे। पथ्याशाके। रामठ्याम् ॥

नाणकः। त्रि। प्रशस्ते ॥ अणकःकुत्सितः ॥ तद्विरुद्धः ॥ न। मुद्राचिह्नितनिष्कादौ ॥ यथा। तुलाशासनमानानां कूटकृन्नाणकस्यच। एभिश्चव्यवहर्त्ताय: सदाप्योदण्डमुत्तममिति याज्ञवल्क्यः ॥

नातिमानिता। स्त्री। अतिमानित्वाभावे। पूज्येषु नम्रतायाम् ॥

नाथः । पुं । कुलगुरौ ॥ कुलपरम्परागतस्वामिनि ॥ नासारज्जौ ॥ ऐश्वर्ययुक्ते । अधिपे । आर्ये । स्वामिनि ॥ त्रि । प्रार्थनीये ॥

नाथमानः । त्रि । उपतप्यमाने ॥ याचमाने ॥

नाथवान् । त्रि । परायत्ते । परतन्त्रे ॥ नाथोऽस्यास्ति । तदस्यास्तीति मतुप् ॥

नाथहरिः । पुं । पशौ ॥ नाथं हरतीति विग्रहे हरतेर्दृतिनाथयोः पशाविति नाथकर्मोपपदाद्धरते रिन् प्रत्ययः ॥

नादः । पुं । ध्वनौ । शब्दे ॥ वर्णे ॥ अर्द्धेन्दौ । अर्द्धमात्रायाम् ॥ णद० । घञ् ॥ ब्रह्मस्वरूपे घोषविशेषे ॥ यथा । सच्चिदानन्दविभवात् सकलात् परमेश्वरात् । आसीच्छक्तिस्ततो नादस्तस्माद्बिन्दुसमुद्भवः ॥ नादो बिन्दुश्च बीजञ्च सएव त्रिविधो मतः । भिद्यमानात् पराद्बिन्दोरुभयात्मा रवो भवत् ॥ सरवः श्रुतिसम्पन्नः शब्दो ब्रह्माभवत्परमिति ॥ सकलात् मूर्त्तात् । नादो घोषः । बिन्दुः प्रणवः सचवाजञ्च सर्ववर्णप्रभवत्वात् ॥ * ॥ नाभेरूर्द्धं हृदिस्थानान्मारुतः प्राणसंज्ञकः । नदति ब्रह्मरन्ध्रान्ते तेन नादः प्रकीर्त्तितः ॥ अपिच । आकाशाग्निमरुज्जातो नाभेरूर्द्ध्वं समुच्चरन् । मुखेऽभिव्यक्तिमायाति यः स नाद इतीरितः ॥ सचप्राणिभवोऽप्राणिभवश्चोभयसम्भवः । आद्यः कायभवो वीणादिभवस्तु द्वितीयकः ॥ तृतीयोऽपिच वंशादिभव इत्थं त्रिधा मतः । यदुक्तं ब्रह्मणः स्थानं ब्रह्मग्रन्थिश्च योमतः ॥ तन्मध्ये संस्थितः प्राणः प्राणाद्वह्निसमुद्भवः । वह्निमारुतसंयोगान्नादः समुपजायते ॥ न नादेन विनागीतं ननादेन विना स्वरः । न नादेन विना रागस्तस्मान्नादात्मकं जगत् ॥ न नादेनविनाज्ञानं न नादेन विनाशिवः ॥ नादरूपं परंज्योति नादरूपी परं हरिः ॥ इतिसङ्गीतदामोदरः ॥

नादेयम् । न । सैन्धवलवणे ॥ सौवीराञ्जने ॥ नदीनदसम्बन्धिजले ॥ शेषिकेऽर्थे पुनद्यादिभ्योढक् ॥ नद्या नदस्यवा नीरं नादेयमितिकीर्त्तितम् । नादेयमुदकं रूक्षं वातलं लघु दीपनम् ॥ अनभिष्यन्दि विशदं कटुकं कफपित्तनुत् ॥ नद्यः शीघ्रवहा लघ्व्यः सर्वायाश्चामलोदकाः । गुर्व्यः शैवलसञ्छन्ना मन्दगाः कलुषाश्चयाः ॥ नदीसरस्तडागस्थेकूपप्रस्र

वर्णादिजे। उदके देशभेदेन गुणा नदोषांश्चलचयेत्॥ पुं। काशतृणे ॥ वानीरवृक्षे ॥ चि। नदीनदसम्बन्धिजलादौ ॥ नदीभवे॥ अग्राह्ये॥ अवश्यदेये ॥ यथा । नादेयंनादेयं शरदि वसन्तेच नाऽऽदेयमिति । अ स्यार्थः। नदीभवं नादेयं जलं शर दि न अदेयम्। अपितु देयं दातव्य मिति। वसन्तेच पुनस्तदेव नादेयं नग्राह्यमिति ॥

नादेयिका। स्त्री। नादेय्याम्॥ नादे य्येव। स्वार्थेकः। ह्रस्वः॥

नादेयी। स्त्री। नागरङ्गे॥ जयायाम्। पताकाविशेषे। वैजयन्तिकायाम्॥ अम्बुवेतसे ॥ भूमिजंबाम्॥ जवा याम्॥ व्यङ्गुष्ठे ॥ अग्निमन्थे ॥ काक जंबाम्॥ नद्यांभवा । नद्यादिभ्यो ढक्। टिड्ढेतिङीप्॥

नाना। अ। विनार्थे॥ नाना नारीं नि ष्फला लोकयात्रेतियथा ॥ अनेका र्थे॥ यथा। नानाविधं देहभृतां स माजम्॥ उभयार्थे॥ नेति नाना। विनञ्भ्यांनानाञौनसहेति नञो- नाञ्प्रत्ययः॥

नानाकन्दः। पुं। पिण्डालौ॥ वहुविध मूले॥

नानात्वम्। न। अनेकभावे। द्वैतद र्शने॥ यथा। जीवात्मनोरनन्यत्वम भेदेन प्रशस्यते। नानात्वं निन्द्यतेय च्चतदेवंहि समञ्जसमिति गौडपा दाः॥ द्वैतंहि सर्वप्राणिसाधारणं स्वा भाविकं शास्त्रवहिष्कृतैःकुतार्किकैर्वि रचितं नानात्वंदर्शनं नतुतद्द्वितीय मस्तीत्यादिश्रुत्यानिन्द्यते यावेद वाह्याःस्मृतय इत्यादिस्मृत्याच॥

नानाध्वनिः। पुं। वीणावेणुकाहलादि शब्देषु॥ इति हारावली॥

नानाननः। चि। अनेकविधास्ये॥ ना नाप्रकाराणि आननानि यस्य॥

नानारूपः। चि। वहुविधे। विविधे। अनेकप्रकारे॥ नाना रूपं यस्य॥

नानार्थः। चि। अनेकार्थे॥ भिन्नप्रयो जने॥

नानावर्णः। पुं। वहुविधशुक्लादिवर्णे। चित्रे। कर्वुरे॥ चि। तद्वति॥

नानावादानुरोधः। चि। भगवति परमे श्वरे॥ अस्ति नास्ति सर्वज्ञः अल्पज्ञः वद्धः मुक्तः एकः अनेक इत्यादीन् नानावादान् अनुरुणद्धि माययानुव र्त्ततेय इतिव्याख्यानात्॥

नानाविधः। चि। अनेकप्रकारे॥ ना नाविधा यस्यसः॥

नानुष्ठेयः। चि। अकर्त्तव्ये। अननुष्ठेये॥

नान्तरीयकम्। चि। अवश्यम्भाविनि॥

यथा। प्रतिवन्धकाभावे नान्तरीयकी कार्य्योत्पत्तिः । अवश्यम्भाविनी-त्यर्थः ॥

नान्त्वम् । न । स्तोत्रे ॥ नमति अनेनवा । णम० । भ्रसुजिगमिनमीतिष्ट्रन् इति ॥

नान्दी । स्त्री । समृद्धौ ॥ नाटकादौम ङ्गलश्लोके । मङ्गलपाठे ॥ यथोक्तंभ रतादिभिः। आशीर्वचनसंयुक्ता स्तु तिर्य्यस्मात्प्रवर्त्तते। देवद्विजनृपादी नां तस्मान्नान्दीति सास्मृता ॥ * ॥ नाटकेविघ्नविघातायादौनान्दीका-र्य्या । यदाहभरतः। यद्यप्यङ्गानि भू यांसि पूर्वरङ्गस्य नाटके। तथाप्यव-श्यं कर्त्तव्यानान्दीविघ्नप्रशान्तये ॥ दे वद्विजनृपादीनामाशीर्वादपरायणा-। नन्दन्तिदेवतायस्मात्तस्मान्नान्दीप्र कीर्त्तिता ॥ अन्यच्च । देवद्विजनृपा-दीना माशीर्वन्दनपूर्विका। नान्दी कार्य्यावुधै र्यत्नान्नमस्कारेणसंयुता॥ गङ्गानागपतिः सोमः सुधानन्दाजया शिषः। एभिर्नामपदैः कार्य्या नान्दी धाराभिरङ्किता॥ प्रशस्तपदविन्यासा चन्द्रसङ्कीर्त्तनान्विता। आशीर्वादप रानान्दीयोज्ज्येयं मङ्गलात्मिका॥ का चिद्दशपदानान्दी काचिदष्टपदा त था । सूत्रधारः पठेन्नान्दीं मध्यम स्वरमाश्रितः ॥ इतिमालतीमाध वटीका ॥

नान्दीकः । पुं । तोरणस्तम्भे ॥

नान्दीकरः । त्रि । नान्दीवादिनि । ना न्दीपाठकारिणि ॥ नान्दी माशीर्नम स्क्रियादिरूपं मङ्गलं करोति वदति । दिवाविभेतिटः ॥ भेरी प्राया ना-न्दीतद्वादनशीले इति केचित् ॥ अ चवदिकृत्यौवादनार्थां विच्याहुः ॥

नान्दीपटः । पुं । वीनाहे । कूपादीनां मुखवन्धने ॥ इतिहेमचन्द्रः ॥

नान्दीमुखः । पुं । कूपादिमुखवन्धने। नान्दीपटे ॥ वृद्धिश्राद्धभुजि पितृग-णे॥ यथा। नान्दीमुखं पितृगणं पूज येत् प्रयतो गृहीति विष्णुपुराणम् । सचगणः पित्रादित्रिकम् मातामहादित्रिकश्चेति ॥ न । वृद्धिश्राद्धे ॥

नान्दीमुखी । स्त्री । सामगेतरवृद्धिश्रा द्धभुङ्मातृगणे ॥ शर्क्करीछन्दोभेदे ॥ स्वरभिद्वियदिनौतौ चनान्दीमुखी गौ । यथा । सरसखगकुलालापना न्दीमुखीयं लहरिभुजलताचारुफे नस्मितश्रीः । मुरहरकलयासत्ति मासाद्यकिन्त प्रमुदितहृदया भानु जान्वत्यतीह ॥

नान्दीवादी । त्रि। नान्दीश्लोकपाठका रिणि । नान्दीकरे ॥ नान्दीवदनशी

लः । सुपीतिवदेशिनिः ॥ नाटकादौ मङ्गलार्थं भेर्यादिवादके ॥

नापितः । पुं । नाई इतिख्याते वर्णसङ्करजातिविशेषे । अन्तावसायिनि । चुरिणि । पट्टिकायांकुवेरिणो जाते । इति प० प० ॥ शूद्रायां चत्रिया ज्जातोयमिति विवादार्णवसे तुः ॥

नापितशालिका । स्त्री । नापितशालायाम् । खरकुट्याम् ॥

नाभकः । पुं । वनतिक्ते ॥

नाभागः । पुं । नभगात्मजें ॥ नभगस्यापत्यम् । अण् ॥

नाभिः । पुं । मुख्यनृपे । अग्नीध्रापत्ये ॥ चक्रमध्ये । रथचक्रस्यपिण्ड्याम् ॥ चत्रिये ॥ स्त्री । मृगमदे ॥ पुं । स्त्री । प्राण्यङ्गविशेषे । उदरावर्त्ते । तुन्दकूप्याम् ॥ सूंडीइति भाषा ॥ त्रि । प्रधाने । मुख्ये ॥ नह्यन्ते अराश्च । यह० । नहोभश्चेति इञ् ॥ नभ्यते अचोपनभ्यते ऽनयाऽस्यां वा । गभ० । इञजादिभ्यः ॥ यद्वानाभयति । स्वार्थण्यन्तादचइः ॥

नाभिकण्टकः । पुं । गर्भण्डे ॥ आवर्त्ते ॥ इतिशब्दरत्नावली ॥

नाभिका । स्त्री । कटभीवृत्ते ॥

नाभिगुडकः । पुं । गर्भण्डे । गोण्डे । फूलीसूंडी इतिटूंडीइ तिचभाषा ॥

नाभिगोलकः । पुं । स्फीतनाभौ । नाभिकण्टके । गर्भण्डे ॥ नाभेर्गोलकः ॥

नाभिजः । पुं । ब्रह्मणि । कमलासने ॥

नाभिजन्मा । पुं । ब्रह्मणि । स्रष्टरि । विधातरि ॥ नाभौजन्मास्य ॥

नाभिनाला । स्त्री । अमरायाम् । नाभिसम्बन्धिन्यां नाड्याम् ॥

नाभिभूः । पुं । अजयोनौ । ब्रह्मणि ॥

नाभिवर्षः । पुं । भारतवर्षे ॥

नाभी । स्त्री । नाभौ ॥ मृगमदे ॥ कृदिकारादितिङीष् ॥

नाभीलम् । न । नार्याःवङ्क्षणे ॥ नाभिगाम्भीर्ये ॥ कृच्छ्रे ॥ गर्भण्डे । नाभिगोलके ॥

नाभ्यम् । त्रि । नाभिहिते ॥ नाभये हितम् । शरीरावयवाद्यत् । नाभिनभञ्चेतिनाभेर्नभादेशस्तु न भवति । तस्यगवादियतासन्नियोगशिष्टत्वेन रथनाभावेवप्रवृत्तेः ॥ नाभिसम्बन्धिनि ॥

नाम । अ । कोपे ॥ अभ्युपगमे ॥ विस्मये ॥ स्मरणे ॥ सम्भाव्ये । सम्भावनायाम् ॥ कुत्सायाम् ॥ प्राकाश्ये ॥ विकल्पे ॥ अलीके ॥ इत्येतदर्थे ॥ नामयति नाम्यते वा । णमप्रह्वत्वे । अन्येभ्योपीतिडः ॥

नामकरणम् । न । संस्कारविशेषे ॥

नाम्नःकरणम्। तच्चनाम शर्म्मवर्म्मा द्युपपदान्तत्त्वेनकर्त्तव्यम्। यथा। त तस्तु नामकुर्वीतपितैवदशमेऽहनि। देवपूर्वं नराख्यंहिशर्मवर्मादिसंयुतम्॥ शर्म्मेतिब्राह्मणस्योक्तं वर्म्मेति क्षत्रसंश्रयम्। गुप्तदासात्मकंनामप्र शस्तंवैश्यशूद्रयोः॥ नार्थहीनंनचा शस्तंनापशब्दयुतंतथा। नामाङ्गल्यं जुगुप्स्यंवानामकुर्य्यात्समाक्षरम्॥ नातिदीर्घंनातिह्रस्वं नातिगुर्वक्षरा न्वितम्। सुखोच्चार्य्याक्षरंनामकुर्य्या द्यत्प्रवणाक्षरम्॥ प्रवणाक्षरंलघूत्त राक्षरम्। इतिविष्णुपुराणम्॥ *॥ अयुग्मदान्तंतथास्त्रीणा मितिगोभिलः। अयुग्मक मयुगक्षरम्। दा न्तं दकारान्तम्। यथा। यशोदाधन देत्यादि॥ *॥ अत्रमदनभाष्यंयथा। दशम्यां पुत्रस्य। याज्ञिकाःपठन्ति- दशम्युत्तरकालं पुत्रस्य जातस्य नाम विदध्यात् घोषवदाद्यन्तरन्तस्थमद्दुं त्रिपुरुषानूक्रमनरिप्रतिष्ठितम् त द्धिप्रतिष्ठिततमं भवति द्व्यक्षरं चतु रक्षरंवा नाम कृतं कुर्य्यान्न तद्धित- मिति। नचान्तरेण व्याकरणं कृत स्तद्धिता शक्याविज्ञातु मिति॥ द शम्या उत्तरइतिपञ्चमीतियोगविभा गात् समासः। ततःकालशब्देनबहु

व्रीहिः। क्रियाविशेषणंचैतत्। दश दिनान्याशौचं भवतीतिदशम्युत्तर- कालमित्युक्तम्। यदपिगृह्यकाराः पठन्ति दशम्यां पुत्रस्येति तैरपि दश म्यामितिसामीपिकमधिकरणं व्या- ख्येयम्। घोषवन्तो ये वर्णाःशिक्षा यांप्रदर्शितास्तदादि। अन्तरन्तस्थ- मिति। मध्ये यरलवा यस्यतदित्य र्थः। त्रिपुरुषानूकमिति। नामकर णे योधिकारीपितातस्य ये त्रयःपुरु षास्तानन्काय त्यभिधत्तइतित्रिपुरु षानूक्रम् अन्येषामपिदृश्यतइतिदी र्घइतिकैयटः॥ तस्य श्रीपूर्वकत्वंय था। देवं गुरुं गुरुस्थानं क्षेत्रं क्षेत्राधि देवताम्। सिद्धंसिद्धाधिकारांश्चश्री पूर्वंसमुदीरयेत्॥ स्वर्गकामित्त्वादि नासिद्धोऽधिकारोयेषां नराणामि त्यनेनजीवतां श्रीशब्दादित्त्वंनाम्नो न मृतानांतथेतिशिष्टाचारः॥

नामद्वादशी। स्त्री। व्रतविशेषे॥

नामधेयम्। न। नामनि॥ नामैव। भागरूपनामभ्योधेयः इतिस्वार्थेधे यः॥ नामधेयानाञ्च विधेयार्थपरि च्छेदकतयार्थवत्त्वम्। तथाहि। उ द्भिदायजेतपशुकामइत्यत्रोद्भि च्छ ब्दोयागनामधेयम्। तेनचविधेया र्थपरिच्छेदःक्रियते॥

नाम । न । आकाशादिदेशान्ते संज्ञा विशेषे । सत्त्वप्रधाने नामधेये । वाचकशब्दे । अख्यायाम् । आह्वायाम् । पर्य्याये ॥ नम्यते ऽभिधीयते ऽर्थोनेन । सम० । नामन्सीमन्निति निपातितः ॥ यद्वा । नायते । अभ्यस्यते । म्ना० । नामन्नित्यादिना निपातनान्म्लोपः ॥ न नामग्रहणं कुर्यात्कृपणस्य गुरोस्तथा । भार्यायाश्चाभिशस्तस्य जनकस्य विशेषतः ॥ आत्मनाम गुरोर्नाम नामातिकृपणस्य च । श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोः ॥ न नन्त्याख्यातार्थं प्रतिविशेषणीभवतीति व्युत्पत्त्या स्वादिविभक्त्यर्हे शब्दे ॥ यथा । उणाद्यन्तं कृदन्तञ्च तद्धितान्तं समासजम् । शब्दानुकरणञ्चैव नाम पञ्चविधं स्मृतम् ॥ सर्वाण्येतानि नामानि परस्य ब्रह्मणोनघ । सर्वान् कामानवाप्नोति समाराध्य जगद्गुरुम् ॥ तन्मयत्वेन गोविन्दमित्येतद्ध्यात्मनान्यथा । तन्मयो वांछितान् कामान् यदवाप्नोति मानवः ॥ इति विष्णुधर्मवचनम् ॥ चक्रायुधस्य नामानि सदा सर्वत्र कीर्त्तयेत् । नाशौचं कीर्त्तनेतस्य स पवित्रकरो यतः इति पुराणम् ॥ भगवन् सर्वधर्मज्ञ सर्वशास्त्रविशारद । कलावधर्मबहुले नराणां का गतिर्भवेत् । यद्यस्ति तदुपायो हि दयया तं वदस्व मे । इति जन्मेजयप्रश्ने व्यास उवाच । एक एव महाराज तत्रोपायोस्ति नापरः । सर्वदोषनिरासार्थं ध्यायेद्देवीपदाम्बुजम् ॥ न सन्त्यघानि तावन्ति यावती शक्तिरस्ति हि । नाम्नि देव्याः पापदाहे तस्मात् भीतिः कुतो नृप ॥ अवशेनापि यन्नाम लीलयोच्चारितं यदि । किं किं ददाति तज्जन्तुं समर्थान् चराचरः ॥ प्रायश्चित्तन्तु पापानां श्रीदेवीनाम संस्मृतिः । तस्मात्कलिभयाद्राजन् पुण्यक्षेत्रे वसन्नरः ॥ निरन्तरं पराम्बायानाम संस्मरणं चरेत् । छित्त्वा भित्त्वा च भूतानि हत्वा सर्वमिदं जगत् ॥ देवीं नमति भक्त्या यो न स पापैर्विलिप्यते । रहस्यं सर्वशास्त्राणां मया राजन्नुदीरितम् ॥ विमृश्यैतदशेषेण भज देवीपदाम्बुजम् । अजपां नाम गायत्रीं जपन्ति निखिला जनाः ॥ महिमानं न जानन्ति मायाया वैभवं महत् । गायत्रीं ब्राह्मणाः सर्वे जपन्ति हृदयान्तरे ॥ महिमानं न जानन्ति मायाया वैभवं महत् ॥ एतत् सर्वं समाख्यातं यत् पृष्टन्तु त्वया नृप । युगधर्मव्यवस्थायां किं भूयः श्रोतुमिच्छसि ॥ इति श्रीदेवीभागवते महापुराणे ६ स्क

न्धे ११ ध्यायः ॥

नामयज्ञः । पुं । दीक्षितःसोमयाजी-त्यादिनाममात्रसम्पादकेऽध्वरे ॥ नाम्ने यज्ञः ॥

नामधेयः । त्रि । मृते ॥ इतिहेमचन्द्रः ॥

नामापराधः । पुं । पाद्मोत्तरखण्डप्रसिद्धे साधुनिन्दादिरूपदुरदृष्टजनकव्यापारविशेषे ॥

नामापराधी । त्रि । नामापराधकृति ॥

नायः । पुं । नये । नीतौ ॥ नयनम् । णीञ्० । श्रिणीभुवोऽनुपसर्गइतिघञ्० ॥ नयति । दुन्योरनुपसर्गइतिणोवा ॥

नायकः । त्रि । नेतरि ॥ श्रेष्ठे । प्रधाने ॥ पुं । हारमध्यमणौ ॥ भर्त्तरि ॥ सेनापतौ ॥ शृङ्गारसाधके ॥ नयति । णीञ्० । ण्वुल् ॥

नायकाधिपः । पुं । नरेन्द्रे । राजनि ॥

नायिका । स्त्री । दुर्गायाउग्रचण्डाद्यष्टशक्तिषु ॥ शृङ्गाररसालम्बनविभावरूपायांनार्याम् ॥ कस्तूरीविशेषे ॥ यथा । चूर्णाकृतिस्तुखरिका तिलका तिलाभा कोलस्थवीजसदृशी चकुलत्थिकाख्या । स्थूलाततःकियदियं-किलपिण्डिकाख्यात् तस्मात्किञ्चिद्भिकापिचनायिकैषा ॥ इतिराजनिर्घण्टः ॥

नारः । पुं । तर्णके ॥ नीरे । जले ॥ न । नराणां समूहे ॥ त्रि । परमात्मसम्बन्धिनि ॥ नरसम्बन्धिनि ॥ नरात्समूहेऽण् ॥ नरस्यायम् । तस्येदमित्यण् ॥ मलमूत्रपुरीषास्थिनिर्गतंह्यशुचिस्मृतम् । नारंस्पृष्ट्वातुसस्नेहंसचेलोजलमाविशेदितिस्मृतिः॥

नारकः । पुं । नरके ॥ नरान् क्लामयति वा । नृ० । कृञादिभ्यःवुन् । ततःप्रज्ञाद्यण् ॥ त्रि । नरकस्थे ॥ नरकेभवः । तत्रभवइत्यण् ॥

नारकी । त्रि । नरकस्थे ॥ यथा । परेणविहितंकर्म स्वकर्मेतिवदेच्चयः । सउच्यतेब्रह्मघाती महानारकिनारकी ॥ इतिवृहद्धर्मपुराणम् ॥

नारकीटः । पुं । अश्मकीटे । कुक्कुरकीटे । बग्गीइतिभाषा ॥ त्रि । स्वदत्ताशाविहन्तरि ॥ इतिमेदिनी ॥

नारङ्गः । पुं । पिप्पलीरसे । कणारसे ॥ यमजप्राणिनि ॥ विटे ॥ नारङ्गीतिख्याते । नागरङ्गे ॥ नारङ्गं मधुरंस्वाद्रोचनंवातनाशनम् । अपरन्त्वम्लमत्युष्णंदुर्जरंवातहृत्सरम् ॥ * ॥ चुदोधकवस्त्वन्तरे ॥ यथा । नारङ्गकेसरसपाकृतवीजपूरं योऽश्नाति खण्डमरिचोद्भवचूर्णमिश्रम् । अन्नं गले

विंशतितत्त्वनरस्य तूर्णं सङ्कृद्ध्माया इवराहुग्रहेण चन्द्रः ॥ नारङ्गन्तु परं रुच्यं सुगन्धं मतिचारणम् । वात घ्नंकफलं किञ्चित् पित्तघ्नं विशदंस्मृतमिति ॥ न । गर्ज्जरे ॥

नारङ्गचीरिणी । स्त्री । चीरिकाप्रभेदे ॥ छिन्नानारङ्गमज्जांवै पचेत् सर्पिषि तापिते । तच खण्डं विनि.क्षिप्य पक्वं मत्वावतारयेत् ॥ शीतभूतेविनिःक्षिप्य माचयार्द्धस्रितं पयः । नारङ्गचीरिणीचैषा सुगन्धिसुरभीकृता॥ विष्टम्भिनो हरेद्वातं पित्तञ्च गुरुपाचिका॥

नारङ्गवर्णकम् । न । गाजरे । गृञ्जने ॥

नारदः । पुं । देवर्षिप्रवरे । देवर्षीणां मध्येभगवतोविभूतौ ॥ नरस्यधर्म्यम् । नराच्चेतिवक्तव्यमित्यण् । नारं ददाति । आतोनुपेतिकः ॥ नारं पानीयमित्युक्तं तत् पितृभ्यः सदाभवान् । ददाति तेन ते नाम नारदेतिभविष्यती त्यागमः॥ नारं नरसमूहंद्यति कलहेनेतिवा । नुरिदं नारम-ज्ञानम् । तत् द्यति ज्ञानोपदेशेनेतिवा । दोअवखण्डने । कः ॥ नराणां परमात्मसम्बन्धिनां परमात्मविषयकं ज्ञानं ददाति उपदिशतीतिवा ॥ न । पञ्चविंशति सहस्रश्लोकात्मके महापुराणविशेषे ॥

नारदीयम् । न । उपपुराणविशेषे ॥ त्रि । नारदसम्बन्धिनि ॥

नारसिंहम् । न । उपपुराणविशेषे ॥ त्रि । नृसिंहसम्बन्धिनि ॥

नारसिंहवपुः । पुं । विष्णौ ॥ नरस्य सिंहस्यचावयवा यस्मिन् वपुषिलक्ष्यन्ते तद्वपुर्यस्यसः । नरश्चसिंहश्च नरसिंहौ तयोरवयवाः अवयवेच प्राण्योषधिवृक्षेभ्यइत्यण् । नारसिंहा नरसिंहयोरवयवा अस्मिन् सन्तीत्यण्णन्तात् नारसिंहशब्दान्मत्वर्थीयोर्श आद्यच् । तथाच नारसिंहः नरसिंहावयववत् वपुर्यस्य सतथा ॥

नारा । स्त्री । जले । नीरे॥ दूतिशब्द०॥

नाराचः । पुं । सर्वलोहमयेवाणे । प्रक्षेडने ॥ नरान् आचामति । चमु० । अन्येष्वपिदृश्यते । डः । ततः प्रज्ञाद्यण् ॥ यद्वा । नराणां समूहोनारम् । नारमाचामति । डः ॥ अम्बुहस्तिनि ॥ दुर्द्दिने॥ *॥ धृतिच्छन्दःप्रभेदे । इह ननरचतुष्कसृष्टन्तु नाराचमाचक्षते । यथा । दिनकरतनयातटीकानने चारुसञ्चारिणी अवणनिकटकृष्टमेणेक्षणा कृष्णराधात्त्वयि । ननु विकिरतिनेत्रनाराचमेषाति हृच्छेदनंतदिह मदनविभ्रमोद्भ्रान्तचित्ता॥

भवत्वंद्रुतम् ॥

नाराचिका । स्त्री । नाराच्याम् ॥

नाराची । स्त्री । एषणिकायाम् । स्वर्णकारादीनां लौहतुलाविशेषे । कांटा इति नारजा इतिच भाषा ॥ गौरादित्वात् ङीष् ॥ स्वल्पोनाराचोवाणभेदो नाराचीतिकश्चित् ॥

नारायणः । पुं । अच्युते । भगवति । वासुदेवे ॥ निरुक्तिर्यथा । आपोनारा इतिप्रोक्ता आपोवैनरसूनवः । तायदस्यायनं पूर्वं तेन नारायणः स्मृतः ॥ इतिमनुः ॥ यच्चकिञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपिवा । अन्तर्बहिश्च तत्सर्वं व्याप्यनारायणः स्थितः ॥ इतिमन्त्रार्थः । नारायणाय नम इत्ययमेवसत्यं संसारघोरविषसंहरणायमन्त्रम् । शृण्वन्तुभव्यमतयोयतयोस्तरागा उच्चैस्तरामुपदिशाम्यहमूर्द्ध्वबाहुरिति नृसिंहपुराणम् ॥ शाब्दिकनिरुक्तिस्तु नराज्जातानि तत्त्वानि नाराणीतिविदुर्बुधाः । तान्येवचायनं तस्य तेन नारायणः स्मृतः ॥ नराणां समूहोनारम् । तस्यसमूह इत्यण् । तदयनमस्य । पूर्वपदादितिणत्वम् ॥ यद्वा । नराज्जाताः नाराः आपः । ताअयनंयस्य ॥ क्वचिन्मन्वन्तरे नरस्यधर्मपुत्रत्वमुपगतइति । नरस्यापत्यम् । नडादिभ्यःफकिनारायणः ॥ श्रीकृष्णे ॥ नारायणस्त्वंनहिसर्वदेहिनामात्मास्यधीशोखिललोकसाक्षी । नारायणोऽङ्गं नरभूजलायनात् तच्चापिसत्यं नतवैवमायया ॥ श्रीकृष्णस्य सेनाविशेषे ॥ धर्मपुत्रर्षिविशेषे ॥ सन्न्यासिनि । परिव्राजके ॥ दण्डग्रहणमात्रेण नरोनारायणो भवेदिति स्मृतेः ॥

नारायणक्षेत्रम् । न । गङ्गाप्रवाहावधिहस्तचतुष्टयमिते नारायणस्वामिकेस्थाने ॥ यथा । प्रवाहमवधिंकृत्वा यावद्धस्तचतुष्टयम् । अत्रनारायणः स्वामीनान्यः स्वामीकदाचनेति ॥

नारायणतैलम् । न । औषधपक्वतैलविशेषे ॥ तत् त्रिविधम् । स्वल्पंबृहन्महच्चेतिभेदात् ॥ यथा । विल्वाग्निमन्थश्योनाकपाटलापारिभद्रकाः । प्रसारण्यश्वगन्धाच बृहतीकण्टकारिका ॥ बलाचातिबलाचैवश्वदंष्ट्रासपुनर्नवा । एषांदशपलान् भागान् चतुर्द्रोणेऽम्भसः पचेत् ॥ पादशेषं परिस्राव्यतैलपात्रं प्रदापयेत् । शतपुष्पा देवदारुमांसीशैलेयकं वचा ॥ चन्दनंतगरं कुष्ठ मेलापर्णीचतुष्टयम् । रास्नातुरगगन्धाच सैन्धवं सपुनर्नवम् ॥ एषांद्विपलिकान् भागान्

पेषयित्वाविनिः क्षिपेत् । शतावरी रसश्चैव तैलतुल्यं प्रदापयेत् ॥ आजंवायद्विशगव्यक्षीरंदत्त्वा चतुर्गुणम् । * । पाने वस्तौतथाभ्यङ्गे भोज्ये चैवप्रशस्यते ॥ अश्वोवावातसम्भग्नो गजोवाथदिवानरः । पङ्गुलः पीठसर्पीचतैलेनानेनसिध्यति ॥ अधोभागेचयेवाताः शिरोमध्यगताश्चये । दन्तशूलेहनुस्तम्भेमन्यास्तम्भेगलग्रहे ॥ यस्यशुष्यति चैकाङ्गंगतिर्यस्यच विह्वला । क्षीणेन्द्रियानष्टशुक्राज्वरक्षीणाश्चयेनराः ॥ वधिराल्लजिह्वाश्चं मन्दमेधसएवच । अल्पप्रजाचयानारीयाच गर्भंनविन्दति ॥ वातार्त्तीवृषणौयेषामन्त्रवृद्धिश्चदारुणा । एतत् तैलवरंतेषांनाम्नानारायणंस्मृतमितिस्वल्पनारायणतैलम् ॥ * ॥ शतावरीचांशुमतीपृश्निपर्णीशटीवला । एरण्डस्यचमूलानि वृहत्योः पूतिकस्यच ॥ गवेधुकस्य मूलानितथासहचरस्यच । एषांदशपलान् भागान् जलद्रोणे विपाचयेत् ॥ पादशेषं रसे पूते गर्भं चैनं समावपेत् । पुनर्नवावचादारुशताह्वाचन्दनागुरु ॥ शैलेयंतगरं कुष्ठमेलामांसी स्थिरावला । अश्वाह्वासैन्धवंरास्नापलाद्धानि चपेषयेत् ॥ गव्याजपयसः प्रस्थौद्वौ



द्वावच प्रदापयेत् । शतावरीरसप्रस्थं तैलप्रस्थंविपाचयेत् ॥ * ॥ अस्य तैलस्य सिद्धस्य शृणुवीर्यमतः परम् । अश्वानांवातभग्नानां कुञ्जराणांतथान्नृणाम् ॥ तैलमेतत् प्रयोक्तव्यं सर्ववातनिवारणम् । आयुष्मांश्चनरः पीत्वानिश्चयेन दृढोभवेत् ॥ गर्भमश्वतरीविन्द्यात् किम्पुनर्मानुषी तथा । हृच्छूलंपार्श्वशूलञ्च तथैवार्द्धावभेदकम् ॥ अपचींगण्डमालाञ्च वातरक्तं हनुग्रहम् । कामलां पाण्डुरोगञ्चअश्मरीञ्चा विनाशयेत् ॥ तैलमेतद् भगवता विष्णुनापरिकीर्त्तितम् । नारायणमितिख्यातंवातान्तकरणं शुभमितिवृहन्नारायणतैलम् ॥ * ॥ बिल्वाश्वगन्धावृहतीश्वदंष्ट्राश्योनाकवाट्यालकपारिभद्रम् । क्षुद्राकठिल्लातिवलाग्निमन्थं मूलानिचैषां सरलायुतानाम् ॥ मूलंविदध्यादथपाटलीनां प्रत्येकमेषां प्रवदन्तितज्ज्ञाः ॥ सपादप्रस्थं विधिनोद्धृताञ्चद्रोणे रपामष्टभिरेवपक्वा ॥ पादावशेषेणा(सेनतेन तैलाढकाभ्यां समसेवदुग्धम् । छागस्य मांसद्रवमेव तुल्यमेकचसम्यक्विपचेत् सुबुद्धिः ॥ दद्याद्रसञ्चैवशतावरीणां तैलेन तुल्यं पुनरेवतत्र । रास्नाश्वगन्धाद्रुमदारुका

ष्टं पर्णीचतुष्कागुरुकेशराणि ॥ सिन्धूत्थमांसीरजनीद्वयञ्च शैलेयकं चन्दनपुष्कराणि । एलासयष्टीतगराब्दपद्मम् भृङ्गाह्वर्गोस्तुवचापलाशम् ॥ स्थौणेयवृश्चीरकचोरकाख्यमेभिः-समस्तैर्द्विपलप्रमाणः । कर्पूरकाश्मीरमृगाण्डजानां दद्यात् सुगन्धाय वदन्ति केचित् ॥ प्रस्वेददौर्गन्ध्यनिवारणार्थं चूर्णीकृतानांद्विपलप्रमाणम् । आलोड्यसम्यग्विधिवद्विपक्वंनारायणंनाम महच्चतैलम् ॥ * ॥ सर्वैःप्रकारैर्विधिवत् प्रयोज्यमश्वस्य पुंसां पवनार्द्दितानाम् । ये पङ्गवः पीठविसर्पिणाश्च एकाङ्गहीनार्द्दितवेपमानाः । वाधिर्यशुक्रक्षयपीडिताश्च मन्याहनुस्तम्भशिरोगदार्त्ताः । मुक्तानरास्ते वलवीर्ययुक्ताः संसेव्यतैलं सहलाभवन्ति ॥ वन्ध्याचनारीलभतेच पुत्रंवीरोपमं सर्वगुणोपपन्नम् । शाखाश्रितेकोष्ठगतेचवाते वृद्धौविधेयं पवनार्द्दितानाम् ॥ जिह्वानिलेदन्तगतेचशूले औन्मादकौब्जज्वरकर्षितानाम् । प्राप्नोति लक्ष्मीं प्रमदाप्रियत्वंजीवेच्चिरं चापिभवेद्युवेव ॥ देवासुरेयुद्धवरे समीक्ष्य साध्वश्विभग्नानसुरैः सुरांश्च । नारायणेना पिस्वहस्ताश्वार्थं स्वनामतैलंविहितन्तु तेषाम्

॥ इति सुखबोधे महानारायणतैलम् ॥

नारायणप्रियः । पुं । शिवे ॥

नारायणवलिः । पुं । मृतपतितादीनां प्रायश्चित्तात्मके कर्म विशेषे ॥

नारायणस्थानम् । न । तीर्थविशेषे ॥

नारायणाश्रमः । पुं । वदर्य्याश्रमे ॥

नारायणास्त्रम् । न । विष्णोरस्त्रभेदे ॥

नारायणी । स्त्री । लक्ष्म्याम् । श्रियि ॥ उमायाम् । पार्वत्याम् । दुर्गायाम् ॥ नारायणाज्जाता । नारायणस्य विष्णोःशक्तिः ॥ यद्वा । नारस्य जीवराशेरयनी स्थानभूता ततस्वरूपेत्यर्थः ॥ अवायना नराधारा समुद्रयना ऽपिया । नारायणीसमाख्याता नरनारीप्रवर्त्तिका ॥ वसत्यदृहास वेषुभूतेष्वन्तर्हितायतः । देव्या व्याप्तमिदंसर्वं जगत्स्थावरजङ्गममिति देवीपुराणम् ॥ गङ्गायाम् ॥ मुद्गलमुनेःपत्न्याम् ॥ शतावर्य्याम् । अभीरौ ॥

नारिकेरः । पुं । नालिकेरे ॥ रलयोरभेदः ॥

नारिकेलः । पुं । नालिकेरे ॥ नलति नल्यते वा । वालगन्धे । वाहुलकादिण । केनवायुना इलति चलति । इलगतौ । अच् । नालिश्चासौकेलश्च

। रलयोरभेदः ॥

नारिकेलक्षीरी । स्त्री । क्षीरिकाप्रभेदे ॥ यथा । नारिकेलं तनूकृत्य-च्छिन्नं पयसि गोः क्षिपेत् । सिताग व्याज्यसंयुक्तं तत्पचेन्मृदुनाग्निना ॥ नारिकेलोद्भवा क्षीरी स्निग्धा शीता ऽतिपुष्टिदा । गुर्वी सुमधुरा वृष्या रक्तपित्तानिलापहेतिभावप्रकाशः ॥

नारिकेलिः । पुं । स्त्री । } शिरःफले ।
नारिकेली । स्त्री । } सदापुष्पे ।
सदाफले ॥

नारी । स्त्री । स्त्रियाम् । योषिति । प्रतीपदर्शिन्याम् ॥ नृनरयोर्वृद्धिश्चेति शार्ङ्गरवादिगणपाठात् ङीन् जातिलक्षणङीषो ऽपवादो ङीन् तत्सन्नियोगेनवृद्धिश्च ॥ यद्वा । नुर्नरस्य वा धर्म्या । ऋतो ऽञिति नराच्चेतिवार्त्तिकाच्चाञ् । ङीन् ॥ अस्याश्चतस्रोजातयो भवन्ति । तथाहि । पद्मिनी चित्रिणी चैव शङ्खिनी हस्तिनी तथा । चतस्रो जातयो नार्या रतौज्ञेया विशेषतश्चेति रतिमञ्जरी ॥ मध्याख्यच्छन्दोभेदे । सोमरी ॥ यथा । गोपानां नारीभिः । स्लिष्टोव्यात् कृष्णोवः ॥ चित्रधुनि [॥।] ॥

नारीकवचः । पुं । सूर्यवंशीयमूलकराजे । अश्मकपुत्रे ॥ यो ऽसौ निःक्षत्रे क्ष्मातले ऽस्मिन् क्रियमाणे विवस्त्राभिः स्त्रीभिः परिवार्य रक्षितः । ततस्तं नारीकवचमुदाहरन्तीति विष्णुपुराणे ४ अंशे ४ अध्यायः ॥

नारीकेलः । पुं । नालिकेरे ॥ इति शब्दचन्द्रिका ॥

नारीकेली । स्त्री । नारिकेले ॥ नारिकेलशब्दे ॥

नारीचम् । न । नालिता इति गौडभाषाप्रसिद्धे शाकविशेषे ॥ तप्ते शुभाज्ये बहुजीरकान्विते सुस्वेदितं नारिचसंज्ञशाकम् । ससैन्धवं तक्रविलोड्य पाचितं सम्पापितं प्राकृतभाग्यकेन ॥ रुच्यं वातहरं बल्यं कफकृद्रोगनाशनम् । रूक्षं पित्तहरं किञ्चिच्छाकं नारीचसंज्ञकम् ॥

नारीतरङ्गः । पुं । } पिङ्गे । कामुके ॥
नारीतरङ्गकः । पुं । }

नारीदुग्धम् । न । स्त्रियाः क्षीरे ॥ नार्या लघु पयः शीतं दीपनं वातपित्तजित् । चक्षुःशूलाभिघातघ्नं नस्याश्चोतनयोर्वरम् ॥

नारीदूषणम् । न । स्त्रीणां दोषोत्पादके ॥ यथा । पानं दुर्जनसंसर्गः पत्या च विरहो ऽटनम् । स्वप्नोऽन्यगेहवासश्च नारीणां दूषणानि षट् ॥

नारीष्टा । स्त्री । मल्लिकायाम् ॥

नार्य्यङ्गः । पुं । नागरङ्गे ॥ न । नार्या अङ्गे ॥

नालम् । न । काण्डे । नालायाम् । उत्पलादिदण्डे ॥ मृणाले ॥ नलति । णलबन्धे । ज्वलितीतिणः ॥

नालः । पुं । नले । जलनिर्गमे ॥ यतः । प्रणालः ॥ काण्डे ॥ पद्मादिवृन्दे ॥ नलत्यनेन नालयति वा । नलमन्धे । हलश्चेतिघञ्ज्ञा ॥

नालवंशः । पुं । नले ॥

नाला । स्त्री । नाले । अब्जादिदण्डे ॥ नलति । णल० । ज्वलितिकसन्तेभ्योणः ॥

नालिः । स्त्री । नाड्याम् । शिरायाम् ॥ पद्मादिदण्डे । शाकविशेषे ॥

नालिकः । पुं । महिषे ॥ न । पद्मे ॥

नालिका । स्त्री । नालिताभेदे । खेतकलंब्याम् ॥ पद्मादिनाले ॥ चर्मकषायाम् ॥ हस्तिनः कर्णवेधन्यास्त्रम् ॥ नाले ॥ काले ॥ चुल्लिरंध्रे ॥ विवरे ॥ वेणुभाजने ॥ नाड्याम् ॥

नालिकेरः । पुं । नारिकेले । नालियर इतिभाषा प्रसिद्धे ॥ नालिकेरफलं शीतं दुर्ज्जरं वस्तिशोधनम् । विष्टम्भि बृंहणं बल्यं वातपित्तास्रदाहनुत् ॥ विशेषतः कोमलनालिकेरं निहन्ति पित्तज्वरपित्तदोषान् । तद्वज्जीर्णं गुरुपित्तकारिविदाहि विष्टम्भिमतं भिषग्भिः ॥ तस्याम्भः शीतलं हृद्यं दीपनं शुक्रलं लघु । पिपासापित्तजित् स्वादुवस्तिशुद्धिकरं परम् ॥ * ॥ नालिकेरस्य तालस्य खर्जूरस्यशिरांसि तु । कषायस्निग्धमधुरबृंहणानिगुरूणिच ॥ *॥ प्रथमवयसि दत्तं तोयमल्पं पिबन्तः शिरसि निहितभारा नालिकेरा नराणाम् । सलिलममृतकल्पं दद्यु राजीवनान्तं नहि कृतमुपकारं साधवो विस्मरन्ति ॥ अस्यपाको यथा । कुडवं नालिकेरस्यसूक्ष्मं दृषदि पेषितम् । शुद्धखण्डस्य कुडवं गव्यक्षीरे चतुर्गुणे ॥ आलोड्य नालिकेरस्य जले मृदग्निना पचेत् । धान्यकं पिप्पलीं शुण्ठीं चातुर्जातं सुचूर्णितम् ॥ शाणप्रमाणं प्रत्येकं शीतीभूते क्षिपेद्बुधः । नालिकेरखण्डोयं पुंस्त्वनिद्राबलप्रदः ॥ अम्लपित्तं क्षयं कासं शूलं च परिणामजम् । नाशयेद्रक्तपित्तञ्च शुष्कं दावानलो यथा ॥ अत्र घृतपलेन कुष्माण्डवन्नालिकेरस्य भर्जनं विधेयमिति ॥ बालस्य नालिकेरस्य जलं प्रायो विरेचनमिति वल्लभः ॥ नलति नल्यते वा । णल० । बाहुलकात् इण् । केन वायुना ईर्यते । ईर० । घञ् । नालिश्चासौ

केरश्च ॥

नालिकेरकः । पुं । नालिकेरे ॥

नालिकेरक्षीरिका । स्त्री । नारिकेल क्षीर्याम् ॥

नालिता । स्त्री । पट्टशाके । नारीचे ॥

नाली । स्त्री । शाककदम्बे । डगल इति भाषा ॥ स्वतःप्रसिद्धे शाकविशेषे ॥ नालेन रहिता नाली सुस्विन्ना मुष्टिपीडिता । घृते तप्ते परिक्षिप्ता चिञ्चिणीपत्रसंयुता ॥ नाली सरा लघुः शीता पित्तनुत् कफवातला । ब्रह्मलोककरी ज्ञेया लिप्ता शोथघ्निका मता ॥ हस्तिकर्णवेधन्याम् ॥ घट्याम् ॥ पद्मे ॥ पद्मदण्डे ॥ प्रणाल्याम् ॥ वाद्यविशेषे ॥ नलति अनया वा । णल० । हलश्चेतिघञ् ॥ नालयति वा । पचाद्यच् । गौरादित्वात् ङीष् ॥

नालीकः । पुं । अङ्गे ॥ शरे ॥ शल्ये ॥ मुखमात्रायःसंयुक्तेशरे ॥ न । अब्जषण्डे ॥

नालीकिनी । स्त्री । पद्मसमूहे । पद्मिन्याम् ॥ नालीकानि सन्त्यस्याम् । पुष्करादित्वादिनिः ॥

नालीघटी । स्त्री । दण्डबोधिवाद्यभेदे ॥

नालीव्रणः । पुं । नाडीव्रणे ॥

नावनम् । न । नस्ये । नासाग्राह्यौषधे ॥

नावयज्ञिकः । पुं । कालविशेषे ॥ नवयज्ञोऽस्मिन् वर्त्तते । तदस्मिन्नवर्त्तत इत्युपसङ्ख्यानाट्ठञ् ॥

नाविकः । पुं । कर्णधारे । नौपृष्ठदण्डधारके ॥ नावा तरति । नौद्व्यचष्ठन्निति ठन् ॥ नौरस्यास्ति । व्रीह्यादित्वाट्ठन् ॥

नावी । त्रि । नौमति ॥ नौरस्यास्ति । व्रीह्यादित्वादिनिः ॥

नाव्यम् । त्रि । नौतार्यदेशे ॥ न । नौतरणयोग्यजले ॥ नावा तार्यम् । नौवयोधर्मेत्यादिना यत् । वान्तोयीत्यवादेशः ॥

नाशः । पुं । पलायने ॥ निधने ॥ अनुपलम्भे । अदर्शने ॥ परिध्वस्तौ ॥ नशनम् । णश० । घञ् ॥ कुलनाशकारणं यथा । अन्टतात् पारदार्याच्च तथाऽभक्ष्यस्य भक्षणात् । अश्रौतधर्माचरणात् क्षिप्रं नश्यति वै कुलम् ॥ अश्रोत्रियेवेददानात् वृषलेषु तथैव च । विहिताचारहीनेषु क्षिप्रं नश्यति वै कुलम् ॥ इति कूर्मपुराणम् ॥ यावच्च वेदधर्माः स्युर्यावत् स्याच्छङ्कराचंनम् । यावत् स्याच्छुचिकृत्यञ्च तावन्नाशोभवेन्नहि ॥

नाशनः । त्रि । नाशकर्त्तरि ॥ नाशय

ति । शम० । ल्युः ॥

नाशी । त्रि । नाशविशिष्टे ॥

नासत्यौ । पुं । अश्विनीकुमारयोः ॥ न सत्यं ययोः सत्यौ वा सत्यौ । न असत्यौ । नभ्राण्नपान्नवेदेति नञः प्रकृतिभावः ॥ * ॥ संज्ञा च सूर्यस्य स्त्री उत्तरकुरौ धृताश्वरूपा तपश्चन्त्यासीत्- सूर्योपि तत्सङ्गमेच्छुः तुरङ्गरूपी ससमीपमगात् । स च तयान्यपुरुषधिया निरस्तः सन् तन्नासापुटे रेतोऽभ्यषिञ्चत् । तचतौ जातावित्युपाऽऽख्यायते । नासां त्यक्तवन्तौ नासत्यौ । अन्येभ्योपीति डः । ङ्यापोरिति ह्रस्वत्वमिति वा ॥

नासा । स्त्री । नासिकायाम् ॥ नास्यते । णास्ट शब्दे । गुरोश्चेत्यः ॥ नासतेऽनया वा । अच् । हलश्चेति घञ् वा ॥ अस्याः शुभाशुभलक्षणं यथा । शुकनासः सुखी स्याच्च शुष्कनासेति जीवनम् । छिन्नाग्ररूपनासः स्यादगम्यागमनेरतः ॥ दीर्घनासे च सौभाग्यं चौरश्चाकुञ्चितेन्द्रियः । स्त्रीमृत्युश्चिपिटनास ऋजुर्भाग्यवतां भवेत् ॥ अल्पच्छिद्रा सुपुटा च अवक्रा च नृपेश्वरे । क्रूरे च अवक्रा स्या इतिनां चचुतंसकृत् इति गरुडपुराणम् ॥ द्वारोर्द्धस्थितदारुणि । स्तम्भद्वारस्थकाष्ठे । उपरिभित्तिधारककाष्ठे ॥ वासकवृक्षे ॥

नासाछिद्री । स्त्री । पूर्णिकापक्षिणि ॥

नासादारु । न । द्वारोर्द्धस्थितकाष्ठे । जानकाठ इति कपालि इति च गौडभाषा ॥

नासायोनिः । पुं । सौगन्धिकाख्यक्लीबे ॥

नासालुः । पुं । कट्फलवृक्षे ॥

नासासंवेदनः । पुं । काण्डीरलतायाम् ॥

नासास्रावः । पुं । पीनसे ॥

नासिकन्धमः । त्रि । नासिकां शब्दायमानां यः करोति तत्र ॥ नासिकया शब्दकर्त्तरि ॥ नासिकां धमति । नासिकास्तनयोर्ध्माधेटोरिति खश् । मुम् । खित्यनव्ययस्येति ह्रस्वः ॥

नासिकन्धयः । त्रि । नासिकया पानकर्त्तरि ॥ नासिकां धयति । धेट् पाने । नासिकास्तनयोरिति खश् । मुम् । ह्रस्वः ॥

नासिका । स्त्री । नासायाम् । गन्धवहायाम् । घ्राणेन्द्रिये । नांक इति भाषा ॥ नासते । णासृ० । ण्वुल् ॥

नासिकामलम् । न । नासास्थितमले । शिङ्घाणे । सिणक इति रेंट इति च भाषा ॥

नासिकाशब्दः । पुं । घोत्कारे । घराडू इति भाषा ॥ यथा । शयानं रावणं दृष्ट्वा तल्पे मर्द्दति वानरः । नासा

यूथैस्तु घोत्कारै र्विशद्भिर्वायुसेवकै रितिनारसिंहपुराणे ४५ अध्यायः॥

नासिक्यम्। न। नासिकायाम्॥ त्रि। नासायांभवे॥ शरीरावयवाद्यत्॥

नासिक्यौ। पुं। अश्विनीकुमारयोः॥

नासिक्यकम्। न। नासिकायाम्॥

नासीरम्। न। नायकाग्रके। नायकस्याग्रेसारिकायां सेनायाम्॥ सेनामुखे॥ पुं। अग्रेसरे॥

नास्ति। अ। अस्तित्वाभाववति। अविद्यमानतायाम्। नहिं इति भाषा॥ यथा। अतिथिर्बालकश्चैव राजा भार्यातथैवच। अस्तिनास्तिनजानन्ति देहिदेहि पुनः पुनः॥ इतिचाणक्यम्॥

नास्तिकः। पुं। ईश्वरनास्तित्ववादिनि पाषण्डे। वेदाप्रामाण्यवादिनि। नास्तिपरलोक इतिमतिविशिष्टे। लौकायतिके। वार्हस्पत्ये॥ सचषड्विधः। माध्यमिकः योगाचारः सौत्रान्तिकः वैभाषिकः चार्वाकः दिगम्बरश्चेति भेदात्॥ नास्ति परलोकः इतिमतिरस्य। अस्तिनास्तिदिष्टं मतिरिति नास्तीतिनिपातात् वचनसामर्थ्यान्नास्तीतिनिपाताख्यातसमुदायाद्वा ठक्॥ यद्वा। नास्ति यज्ञफलम् नास्तिच परलोकः इत्येवंकायति। कैशब्दे। डः॥

नास्तिकता। स्त्री। मिथ्यादृष्ट्याम्। परलोकस्तृषावुद्धौ। कर्मफलापवादकज्ञाने॥ नास्तिकस्य भावः। तल्॥

नास्तिकवृत्तिः। त्रि। नास्तिपरलोक इति प्रवर्त्तके॥

नास्तिक्यम्। न। शास्त्रीय फलवत्कर्मसु फलाभावबुद्धौ॥ नास्तिकस्य कर्म भावोवा। पुरोहितादित्वात् यक्॥

नास्तिदः। पुं। आम्रवृक्षे॥ इतिशब्दचन्द्रिका॥

नास्यम्। त्रि। वलीवर्द्दादिनासासम्बन्धिन्यां रज्जौ। नाँथइति भाषा॥ नासायां भवम्। शरीरावयवाद्यत्॥

नाहः। पुं। वन्धने॥ कूटे॥

नाहलः। पुं। म्लेच्छजात्यन्तरे॥ इति हेमचन्द्रः॥

नाहुषिः। पुं। ययातिभूपतौ॥ नहुषस्य अपत्यम्। अतइञ्॥

नि। अ। निवेशे॥ भृशार्थे॥ नित्यार्थे॥ संशये॥ क्षेपे॥ कौशले॥ उपरमे॥ सामीप्ये॥ आश्रये॥ दाने॥ मोक्षे॥ अन्तर्भावे॥ बन्धने॥ राशौ॥ अधोभावे॥ विन्यासे॥ निश्चये॥ निषेधेपीति दुर्गादासः॥

निःचरः। त्रि। चत्रिय शून्यदेशादौ॥

निःशङ्कः। त्रि। निर्भीके॥

निःशब्दः । त्रि । शब्दरहिते । चुप् इतिभाषा ॥

निःशलाकः । त्रि । निर्जने । रहसि ॥ निर्गता शलाका यस्मात् ॥ शलाका या निर्गतोवा ॥

निःशल्या । स्त्री । दन्तीवृक्षे ॥

निःशूकः । पुं । मुण्डशालौ ॥

निःशेषः । त्रि । निखिले । समस्ते ॥ निःक्रान्तं शेषात् । निरादयइतिसमासः ॥

निःशोकः । त्रि । शोकवर्जिते ॥

निःशोध्यः । त्रि । निर्मले । मृष्टे । शोधिते ॥ अनवस्करे ॥ निष्क्रान्तं शोध्यमस्मात् ॥ शोध्यान्निष्क्रान्तमितिवा ॥

निःश्रयणी । स्त्री । } अधिरोहिण्याम् ॥
निःश्रयिणी । स्त्री । } ॥ इतिशब्दरत्नावली ॥

निःश्रेणिः । स्त्री । वंशकाष्ठादिनिर्मिते सोपाने । अधिरोहिण्याम् । नसेनी इतिसीढी इतिचभाषा ॥ निश्चिता श्रेणिः पङ्क्तिरत्र ॥ खर्जूरीपादपे ॥

निःश्रेणिका । स्त्री । निश्रेणी इतिकोङ्कणप्रसिद्धे तृणवि० । निरसायाम् । वनवल्लर्याम् ॥ निःश्रेण्याम् । अधिरोहिण्याम् ॥ यथा । मानुष्यं दुर्लभं प्राप्य सेविता न महेश्वरी । निःश्रेणिकाग्रात्तु पतित अधश्चेन्न विद्महे ॥ अपिच । आसाद्यजन्म मनुजेषु चिराद्दुरापं तत्रापिपाटवमवाप्यनिजेन्द्रियाणाम् । नाभ्यर्चयन्तिजगतां जनयित्रि ये त्वां निश्रेणिकाग्रमधिरुह्यपुनः पतन्तीति देवीभागवतम् ॥

निःश्रेणी । स्त्री । अधिरोहिण्याम् ॥

निःश्रेयसम् । न । कल्याणे ॥ मोक्षे ॥ विद्यायाम् ॥ अनुभावे ॥ भक्तौ ॥ पुं । शङ्करे । शिवे ॥ निश्चितं नितरां वाश्रेयः निःश्रेयसम् । अचतुरविचतुरेत्यादिनानिपातितम् ॥

निःश्रेयसकरः । पुं । ज्ञानोत्पत्तिहेतुत्वेन मोक्षोपयोगिनि कर्मयोगे । सन्यासे ॥ निःश्रेयसं करोति । डुकृञ्० । कृञोहेतुताच्छील्यानुलोम्येष्विति हेत्वर्थेटः ॥

निःश्रेयसकरी । स्त्री । विद्यायाम् ॥ टित्वान्ङीप् ॥

निःश्वासः । पुं । मुखाद्बहिर्निर्गमनशालिनि वायौ ॥ निर्गतः श्वासः ॥ निःश्वसनं वा । श्वस० । घञ् ॥

निःषन्धिः । त्रि । दृढे ॥ सुषा० षत्वम् ॥

निःषमम् । अ । गर्ह्ये । निन्द्यमाने ॥ निर्गतं समसत्र । तिष्ठद्गुप्रभृतीनिचेत्यव्ययीभावत्वम् । सुविनिर्दुर्भ्यइतिषत्वम् ॥

निःसङ्गः । पुं । देहादिसङ्गरहिते पर

मात्मनि ॥ निःसङ्गस्य ससङ्गेन कूटस्थस्य विकारिणा । आत्मनोऽनात्मनायोगो वास्तवो नोपपद्यते ॥ स्वतोवुद्धं स्वतःशुद्धं स्वतोमुक्तं निरात्मिका । अविचारितसंसिद्धि रविद्या लिङ्गते कथम् ॥ त्रि । सविकल्पकानन्दानासक्ते । निरपेक्षे ॥ फलानभिनिवेशवति ॥ मेखलरहिते ॥ यथा । मत्स्यस्य सङ्गा दृभवच्च योमे सुतादिरागो मुषितोऽस्मि तेन । निःसङ्गता मुक्तिपदं यतीनांसङ्गादशेषाः प्रभवन्ति दोषाइति ॥ निःसङ्गएव मुक्तःस्या द्दोषाः सर्वेपि सङ्गजाः । सङ्गात्पतत्त्यहो ज्ञानी चावश्यंकिमुताल्पविदितिकुलार्णवः ॥

निःसत्त्वः । त्रि । धैर्यशून्ये ॥

निःसन्धिः । त्रि । सन्धिरहिते । दृढे ॥

निःसम्पातः । पुं । अर्द्धरात्रे । निशीथे ॥

निःसरणम् । न । सृत्यौ ॥ उपाये ॥ मोक्षे ॥ निर्गमे ॥ गेहादिमुखे । निर्गमन प्रवेशमार्गे ॥ निस्सरन्त्यनेन । सृगतौ । करणे ल्युट् ॥

निःसहतरः । त्रि । असहतरे ॥ सहोर्निपूर्वात् पचाद्यजन्तात् तरप् ॥

निःसहत्वम् । न । अक्षमत्वे ॥ सहते । षह० । पचाद्यच् । उपसर्गेणसमासेत्वप्रत्ययः ॥

निःसारः । पुं । श्योनाकप्रभेदे ॥ शाखोटवृक्षे ॥ त्रि । साररहिते ॥ यथा । मानुष्ये कदलीस्तम्भनिःसारे सारमार्गणम् । यः करोति स सम्मूढो जलवुद्बुदसन्निभे ॥ जगत् सर्वन्तु निःसार मनित्यं दुःखभाजनम् । उत्पद्यते क्षणादेतत् क्षणादेतद्विपद्यते ॥

निःसारकः । पुं । अतीसारभेदे ॥ दध्ना ससारेण समाक्षिकेण भुञ्जीत निःसारकपीडित स्तु । सुतप्तकुप्यक्वथितेन चापि क्षीरेण शीतेन मधुप्लुतेन ॥ भुञ्जीतपथ्यमितिशेषः ॥

निःसारणम् । न । गृहादीनां निर्गमादिपथे । निःसरणे ॥ निष्कासने ॥

निःसारा । स्त्री । कदलीवृक्षे ॥

निःसारितः । त्रि । निष्कासिते । वहिष्कृते ॥

निःसीमः । त्रि । अपर्यन्ते ॥

निःसृतः । त्रि । निर्गते ॥

निःस्नेहः । त्रि । स्नेहवर्जिते ॥ निर्गतः स्नेहोयस्मात् ॥

निःस्नेहा । स्त्री । अतस्याम् ॥ निश्चये नस्नेहोऽस्याम् ॥

निःस्रावः । पुं । आचामे । मासरे । मांड इति प्रसिद्धे भक्तरसे ॥

निःस्वः । त्रि । दरिद्रे ॥ अस्यलक्षणं यथा । शूर्पाकारौ विरूक्षौ च वक्रौ पा

